कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ २ ॥

(महानाटके)

मुञ्च कोपमनिमित्तकोपने ! सन्ध्यया प्रणमितोऽस्मि नान्यथा
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥ ३ ॥

(कालिदासस्य)

इति नायकप्रशंसापद्धतिः ॥

---

## १८३. अथ नायिकाप्रशंसापद्धतिः ।

नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् ।
किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः ॥ १ ॥

(कामन्दकीये)

प्राणानां च प्रियायाश्च मूढाः सादृश्यकारिणः ।
प्रियाः कण्ठगता रत्यै प्राणा मरणहेतवः ॥ २ ॥

(प्रतापरुद्रे)

स्मृता भवति तापाय दृष्टा चोन्मादकारिणी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ३ ॥

(वल्लभस्य)

यद्यत् साधु न चित्रेऽस्याः क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम् ॥ ४ ॥

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ५ ॥

(कालिदासस्य)

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।
एषा तु स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तस्यास्तनुं तन्वता ॥ ६ ॥
(अलङ्कारसर्वस्वे)

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि।
इति न भजते वस्तु प्रायः परस्परसङ्करं
तदियमबला धत्ते लक्ष्मीं कथं सकलात्मिकाम् ॥ ७ ॥
(सरस्वतीकण्ठाभरणे)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तप्रभः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ८ ॥
(कालिदासस्य)

*विरहे विसं व्व विसमा अमअमआ होइ सङ्गमे अहिअम्।
किं विहिणा समअं चिअ दोहिं वि पिआ विणिम्मिआ ॥ ९ ॥

तुह मुहसारिच्छं ण लहइ त्ति संपुण्णमण्डलो विहिणा।
अण्णमअं व्व घटइउं पुणो वि खण्डिज्जइ मिअङ्को ॥ १० ॥

एत्तहमेत्तम्मि जए सुन्दरमहिलासहस्सभरिए वि।
अणुहरइ णवर तिस्सा वामद्धं दाहिणद्धस्स ॥ ११ ॥

चिअपसिअदेसु फकन्दुअं रमसु अण्ठहा किंपि।
भञ्जिहिसि अन्धलाढिव्व णवर एका अणंगस्स ॥ १२ ॥

---

* विरहे विषमिव विषमामृतमया भवति सङ्गमेऽधिकम्।
किं विधिना सममेव द्वाभ्यामपि प्रिया विनिर्मिता ॥
तव मुखसादृश्यं न लभत इति सम्पूर्णमण्डलो विधिना।
अन्यमयमिव घटयितुं पुनरपि खण्ड्यते मृगाङ्कः ॥
एतावन्मात्रे जगति सुन्दरमहिलासहस्रभृतेऽपि।
अनुहरति केवलं तस्या वामार्धं दक्षिणार्धस्य ॥

*जस्स जहिं विअ पढमं तिस्सा अंगम्मि णिवडिआ दिट्ठी ।
तस्स तहिं चेअ ठिआ सव्वंगं केण वि ण दिट्ठम् ॥ १३ ॥

(गाथाकोशे)

इति नायिकाप्रशंसापद्धतिः ॥

---

## १८४. अथ वसन्तपद्धतिः ।

क्षीरक्षालितचन्द्रेव नीलधौताम्बरेव च ।
टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥ १ ॥

पतितैः पतमानैश्च पादपस्थैश्च मारुतः ।
कुसुमैः पश्य सौमित्रे ! क्रीडतीव समन्ततः ॥ २ ॥

पद्मकेसरसंस्पृष्टो वृक्षान्तरविनिस्सृतः ।
निःश्वास इव सीताया वाति वायुर्मनोहरः ॥ ३ ॥

पादपात् पादपं गच्छन् शैलाच्छैलं वनाद्वनम् ।
वाति नैकरसास्वादः स मोदित इवानिलः ॥ ४ ॥

(श्रीरामायणे)

बालेन्दुवक्त्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ ५ ॥

चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षस्तदेव जातं वचनं स्मरस्य ॥ ६ ॥

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे ! मध्ये मधुश्रीः स्थिता ॥ ७ ॥

(कालिदासस्य)

---

* यस्य यत्रैव प्रथमं तस्या अङ्गे निपतिता दृष्टिः ।
तस्य तत्रैव स्थिता सर्वाङ्गं केनापि न दृष्टम् ॥

*कुसुमाउहपिअदूअओ मुउलीकिदबहुचूअओ ।
सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥ ८ ॥

इह पढमं महुमासो जणस्स हिअआइं कुणइ मिउळाइं ।
पच्चा विद्धइ कामो ळद्धप्पसरेहिं कुसुमबाणेहिं ॥ ९ ॥

(रत्नावल्याम्)

अभिणवराअक्खित्ता महुअरिआ वामएण कामेण ।
उत्तम्मइ पत्थन्तं दट्ठुं पिअदंसणं दइअम् ॥ १० ॥

(प्रियदर्शिकायाम्)

इति वसन्तपद्धतिः ॥

## १८५. अथ घर्मपद्धतिः ।

प्रविश्य तत्र मूलानि नीत्वा मध्यन्दिनातपम् ।
अध्वनीना इव च्छाया निर्गच्छन्ति शनैः शनैः ॥ १ ॥

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धमरण्यानां पश्यतीव विभावसुः ॥ २ ॥

(सोमदत्तभट्टस्य)

सुभगसलिलावगाहाः पाटलसंसर्गिसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

दिने दिने शैवलवन्त्यधस्तात् सोपानपर्वाणि विमुञ्चदम्भः ।
उद्दण्डपद्मं गृहदीर्घिकाणां नारीनितम्बद्वयसं बभूव ॥ ४ ॥

नवेषु सायन्तनमल्लिकानां विजृम्भणोद्ग्रन्थिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार ॥ ५ ॥

(कालिदासस्य)

---

* कुसुमायुधप्रियदूतको मुकुलीकृतबहुचूतकः ।
शिथिलितमानग्रहणको वाजति दक्षिणपवनकः ॥

इह प्रथमं मधुमासो जनस्य हृदयानि कुरुते मृदुलानि ।
पश्चाद्विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥

अवन्तक्खविअदोसो परिवड्ढिअमित्तमण्डणालोओ ।
कस्स ण जणेइ दुःखं दिअहा असुणेव्व वाळत्तो ॥ ६ ॥

(गाथाकोशे)

इति धर्मपद्धतिः ॥

---

## १८६. अथ वर्षापद्धतिः ।

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १ ॥

कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ।
अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ २ ॥

मन्दमारुतनिःश्वासं सन्ध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ३ ॥

सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः ।
पतन्तीवाकुला दिक्षु तोयधाराः समन्ततः ॥ ४ ॥

निलीयमानैर्विहगैश्चलद्भिरिव पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५ ॥

सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ६ ॥

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ।
हृष्टा वलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ ७ ॥

(श्रीरामायणे)

अणुदिअहुज्झिजिरीओ आळेए ऊण पहिअजाआओ ।
धारामोक्खणिहेण व मेहाण गळन्ति अस्सूइ ॥ ८ ॥

(सप्तशत्याम्)

इति वर्षापद्धतिः ॥

---

## १८७. अथ शरत्पद्धतिः।

सञ्जहार शरत्कालः कदम्बकुसुमश्रियः।
प्रेयोवियोगिनीनां च निःशेषाः सुखसम्पदः ॥ १ ॥
(उद्भटस्य)

अपीतक्षीबकादम्बमसम्मृष्टामलाम्बरम्।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥ २ ॥
ज्योत्स्नाम्बुनेन्दुकुम्भेन ताराकुसुमशारितम्।
क्रमशो रात्रिकन्याभिर्व्योमोद्यानमसिच्यत ॥ ३ ॥
मयूरा मौनमातस्थुः परित्यक्तमदा वने।
असारतां परिज्ञाय संसारस्येव योगिनः ॥ ४ ॥
सर्वत्रातिप्रसन्नानि सलिलानि तथाभवन्।
ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम् ॥ ५ ॥
अवापुस्तापमत्यर्थं शफर्यः पल्वलोदके।
पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही ॥ ६ ॥
शनकैः शनकैस्तीरं तत्यजुश्च जलाशयाः।
ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधः ॥ ७ ॥
(श्रीविष्णुपुराणे)

स्नपिताः प्रावृषा पूर्वं दिशः परिदधुस्ततः।
शरदोपहृतं सूक्ष्ममम्बरं हंसलक्षणम् ॥ ८ ॥
(सकलविद्याधरचक्रवर्तिनः)

शाखासु सप्तच्छदपादपानां प्रभासु ताराकनिशाकराणाम्।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत् प्रवृत्ता ॥ ९ ॥
(श्रीरामायणे)

*अह मणहरचन्दमुही बन्धुज्जीवाहरा कुवळअच्छी।
विअसिअपङ्कअहत्था विअ प्पवुत्ता सरअळच्छी ॥ १० ॥
(गाथाकोशे)

---

* अथ मनोहरचन्द्रमुखी बन्धुजीवाधरा।कुवलयाक्षी।
विकसितपङ्कजहस्तेव प्रवृत्ता शरल्लक्ष्मीः ॥

* अहिणवचन्दालोआ उद्देसासारदीसमाणजलळवा ।
णिम्माअमज्जणसुहा दरवसुआअच्छविं वहन्ति व दिअहा ॥ ११ ॥
सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेळाळग्गो ।
तारामुत्तावअरो फुडविहडिअमेहसिप्पिसंपुडमुक्को ॥ १२ ॥
पज्जत्तसळिळथोए दूराळोक्कन्तणिम्मळे गअणअळे ।
अच्चासण्णं व ठिअं विमुक्कपरभाअपाअडं ससिबिम्बम् ॥ १३ ॥
चन्दाअवधवळाओ फुरन्तदिअहरअणन्तरिअरूवाओ ।
सोम्मे सरअस्स उरे मुत्तावळिविब्भमं वहन्ति णिसाओ ॥ १४ ॥
(सेतौ)

सरए महद्धदाणं अन्ते सिसिराइं बाहिरुह्णाइं ।
जाआइ कुविअसज्जणहिअअसरिच्छाइ सळिळाइ ॥ १५ ॥
(सप्तशत्याम्)

विमलमिअङ्काहरणो केअइदळधूळिधूसरसरीरो ।
पमहाहि णेव्वविदिसइ उद्दीविअवम्महो सरओ ॥ १६ ॥
उरसि णिवेसिअणळिणीदळाआ तणुईओ वद्धवेणीओ ।
सरआ दइआ जाआ बाअसदळअस्स विरहम्मि ॥ १७ ॥
(गाथाकोशे)

इति शरत्पद्धतिः ॥

---

*अभिनवचन्द्रालोका उद्देशासारदृश्यमानजललवाः ।
निर्मितमज्जनसुखा दरशुष्कच्छविं वहन्तीव दिवसाः ॥
शोभते विशुद्धकिरणो गगनसमुद्रे रजनिवेलालग्नः ।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसम्पुटमुक्तः ॥
पर्याप्तसलिलधौते दूरालोक्यमाननिर्मले गगनतले ।
अत्यासन्नमिव स्थितं विमुक्तपरभागप्रकटं शशिबिम्बम् ॥
चन्द्रातपधवलाः स्फुरद्दिवसरत्नान्तरितरूपाः ।
सौम्ये शरद उरसि मुक्तावलिविभ्रमं वहन्ति निशाः ॥
शरदि महाह्रदानामन्तः शिशिराणि बाहरुष्णानि ।
जातानि कुपितसज्जनहृदयसदृक्षाणि सलिलानि ॥

## १८८. अथ हेमन्तपद्धतिः ।

नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ १ ॥
अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायाः सलिलदुर्भगाः ॥ २ ॥
एते हि समुपासीना विहगा जलचारिणः ।
न विगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ ३ ॥
सेवमाने दिशं सूर्ये भृशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ४ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥ ५ ॥

(श्रीरामायणे)

अवणको सन्तांपं हेमन्तो सज्जणं व्व अव्विळअइ (दु?) ।
दुज्जणवअणेण व्व ताविआण ळोआण साएण ॥ ६ ॥

(गाथाकोशे)

इति हेमन्तपद्धतिः ॥

---

## १८९. अथास्तमयपद्धतिः ।

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥ १ ॥
पद्मकान्तिमरुणत्रिभागयोः सङ्क्रमय्य तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ २ ॥
सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः संनिधाय दिवसं महोदधौ ॥ ३ ॥

दूरमग्नपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ ४ ॥

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः ।
हीयमानमहरत्ययातपं पीवरोरु! पिबतीव बर्हिणः ॥ ५ ॥

खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।
तत् प्रकाशयति यावदुत्थितं मीलनाय खलु तावतश्च्युतम् ॥
[६ ॥

(एते कालिदासस्य)

ओळुग्गपरिस्साणज्झिज्जं तपसारिआ अवणिराआणम् ।
आआमिज्जीति णवजाअन्तळिअत्तणं दुच्छाआणम् ॥ ७ ॥

(गाथाकोशे)

इत्यस्तमयपद्धतिः ॥

## १९०. अथ सन्ध्यापद्धतिः ।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो! दैवगतिश्चित्रा तथापि न समागमः ॥ १ ॥

सन्ध्ययाप्यनुपदं रवेः पदं धर्म्यमस्तशिखरे समर्पितम् ।
प्राक् तथेयमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ २ ॥

सान्ध्यमस्तमितशेषमातपं रक्तरेखमपरा बिभर्ति दिक् ।
साम्परायवसुधा सशोणितं मण्डलाग्रमिव तिर्यगुज्झितम् ॥ ३ ॥

(कालिदासस्य)

सन्ध्या निशावासरयोर्बभासे विभक्तयोरिन्दुदिवाकराभ्याम् ।
विश्लेषशङ्काचकितेन धात्रा सन्दंशदत्ता जतुवर्तिकेव ॥ ४ ॥

(वीरेश्वरस्य)

अत्थसिहरम्मि दीसइ मेरुअडुग्गुट्ठकणअकद्दमकअम्बो ।
वळमाणतुळिअराविरहपळिअट्टाढेअथअबढंव सज्झाराओ ॥ ५ ॥

सञ्झअवमुञ्झन्तं जळिअपसम्मन्त उअवहहाणणिणम् ।
दूरत्थम्मिअदिणअरं जाअं संवत्थसरिसरूवं गअणम् ॥ ६ ॥
(सेतौ)

इति सन्ध्यापद्धतिः ॥

## १९१. अथ तमःपद्धतिः ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १ ॥
(दण्डिनः)

यामिनीदिवससन्धिसम्भवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने ! विजृम्भते ॥ २ ॥
नोर्ध्वमीक्षणगतिर्नचाप्यधो नाभितो न च पुरो न पृष्ठतः ।
लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्त्तते निशि ॥ ३ ॥
शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणायितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ ४ ॥
(कालिदासस्य)

नाभीदघ्नपुराणपङ्कबहळाभोगेव विश्वम्भरा
नीलाद्वैतमयीं बिभर्त्ति विकृतिं भावेषु रूपान्तरम् ।
तत्तद्ग्राह्यमपोह्य पश्चकरणी मूकत्वमापद्यते
यत् सत्यं न तु खण्डताड्यमधुना कल्पेत कृत्स्नं नभः ॥ ५ ॥
(आश्चर्यराघवे)

वहइ व महिअजळभरिओणोळेइ व पच्छओ धरेइ व पुरओ ।
पेल्लेइ व पासगओ गरुआइ व उवरि सण्ठिओ तमणिवहो ॥ ६ ॥
(सेतौ)

इति तमःपद्धतिः ॥

## १९२. अथ चन्द्रोदयपद्धतिः ।

उदयतटान्तरितामियं प्राची सूचयति दिङ् निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ १ ॥

कृष्टं दिवा भानुमतस्तुरङ्गैर्नक्तं घनैः कर्दमितं तमोभिः ।
बीजैर्विकीर्णैरिव चन्द्रिकायां तारागणैर्व्योमतलं विरेजे ॥ २ ॥

(जगदेकवीरचरिते)

नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि ! दिङ्मुखं हरेः केतकैरिव रजोभिरावृतम् ॥ ३ ॥

रुद्धनिर्गमनमादिनक्षयात् पूर्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति रात्रिचोदिता दिग्रहस्यमिव चन्द्रमण्डलम् ॥ ४ ॥

पश्य भामिनि ! नवेन्दुरश्मिभिः सामिभिन्नतिमिरं नभःस्थलम् ।
लक्ष्यते द्विरदभोगदूषितं सम्प्रसीददिव मानसं सरः ॥ ५ ॥

रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः ।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ ६ ॥

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।
नूनमात्मसदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गतिः ॥ ७ ॥

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ८ ॥

(कालिदासस्य)

तो उअअसिहरमिळिअं जाअं उप्पुसिअ तिमिरधनळच्छाअम् ।
इअहुत्ताट्टिअसुरगअदन्तच्छेअपरिमण्डलं ससिबिंबं ॥ ९ ॥

तह परिसण्ठिअसेळं विरिथिणदिसं तउज्झिअणइप्पवहम् ।
घेत्तुण व उक्खन्ती ससिणा तमसंचअं पुणो वि महिअळम् ॥ १० ।

* बहळम्मि तिमिरणिवहे णिव्वाळेऊण सच्चविअरूवाओ ।
अणुबज्जन्ति ससिअरा घेत्तुं ण चअन्ति पाअवच्छाआओ ॥ ११ ।

दीसइ विद्दुमअवं सिन्दूराह अगइन्दुरूहच्छाअम् ।
मन्दरधाउक्कळङ्किअवासुइमण्डणळणिअकलं ससिबिंबं ॥ १२ ॥

(सेतौ)

---

*बहले तिमिरनिवहे निर्वाल्य सत्यापितरूपाः ।
अनुबध्नन्ति शशिकरा ग्रहीतुं न शक्नुवन्ति पादपच्छायाः ॥

जाओ सि खन्दणिज्जो जीसासंगेण मुद्धपकाए ।
तुइ सा वि होइ वीआ पढमा उण चन्दका तुज्झम् ॥ १३ ॥

घणघडिअलोहपञ्जरबन्धं घेत्तूण करणिहाएहि ।
कमकरीतुळपडिकओ चन्दो सिहो व्व णिक्कन्तो ॥ १४ ॥

सन्तापं विजणन्ति संज्झारुणमण्डणम्मि अङ्कस्स ।
रविविम्बत्तिस्सहमुसं सन्दिसइ चक्काअमिहुणेहि ॥ १५ ॥

(गाथाकोशे)

इति चन्द्रोदयपद्धतिः ॥

---

## १९३. अथ प्रभातपद्धतिः ।

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरस्सर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ १ ॥

(कालिदासस्य)

ताव अ अत्थणिअम्बं णवसलिळापुण्णगअपअच्छविकळुसो ।
पत्तो अरुणुण्णामि अपासवळन्तअगणोसरन्तो व्व ससी ॥ २ ॥

*संखोहिअकमळसरो सज्झाअवअंबधाउकद्दमिअमुहो ।
ठाणप्पिडिओ व्व गओ रत्तिं भमिऊण पडिणिउत्तो दिणहो ॥ ३ ॥

(सतौ)

इति प्रभातपद्धतिः ॥

---

## १९४. अथ सम्भोगशृङ्गारपद्धतिः ।

किं शीतलैः क्लमविनोदिभिरार्द्रवातान्
सञ्चारयामि नलिनीदलतालवृन्तैः ।

---

*संक्षोभितकमलसराः सन्ध्यातपाताम्रधातुकर्दमितमुखः ।
स्थानास्फिटित इव गजो रात्रिं भ्रमित्वा प्रतिनिवृत्तो दिवसः ॥

अङ्के निधाय करभोरु! यथासुखं ते
संवाहयामि चरणावुत (पद्म)ताम्रौ ॥ १ ॥
(कालिदासस्य)

तेत्थण्णाजे समुहे वरुणीणं पेम्मळे हिअए।
पेच्छन्ति दप्पणमिव सन्ततं अप्पणो रूवम् ॥ २ ॥

अण्णण्णमहिळापसङ्गं हा देव्वकरे सुअगमदइअस्स।
पुरिसा एकन्तरसा णहु दोसगुणे विआणन्ति ॥ ३ ॥

तापच्छिअरूसमये महिळाणं विब्भसा विराअन्ति।
जाव ण कुवळअदळसच्छाहाइ मळउळन्ति णअणाइ ॥ ४ ॥

अग्गे पुळअं अदरं सव्वेविरं जं पिअअं ससिकारम्।
सव्वं सिसिरेण कअं जं काअव्वं पिअअमेण ॥ ५ ॥

कळ्ळब्विअ खराहिअओ पवसिहिइं पिओ त्ति सुव्वइ जणादो।
तह वड्ढभअवादिणिसे जह से कळ्ळिचिण होइ ॥ ६ ॥

णअणाइ सामळेई णेळाविअमहुअरमन्ददाराइ।
ईस ण हरन्ति हिअअं गेआ इव कण्डळग्गाइ ॥ ७ ॥
(गाथाकोशे)

इति सम्भोगशृङ्गारपद्धतिः ॥

---

## १९५. अथ विप्रलम्भशृङ्गारपद्धतिः।

गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥ १ ॥
(दण्डिनः)

हस्तमाच्छिद्य निर्यासि बलादिति किमद्भुतम्।
हृदयाद् यदि निर्यासि पौरुषं गणयामि ते ॥ २ ॥

अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता।
नादृष्टेन न दृष्टेन भवता विद्यते सुखम् ॥ ३ ॥
(सरस्वतीकण्ठाभरणे)

हारोऽपि नार्पितः कण्ठे स्पर्शसंरोधभीरुणा।
आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ ४ ॥
(उदात्तराघवे)

न ह्येतत् कामयानस्य शक्यमेकेन जीवितुम्।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ ५ ॥

वाहि वात! यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश।
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥ ६ ॥
(श्रीरामायणे)

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना।
स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥ ७ ॥

मूढाः संयोगमिच्छन्ति वियोगस्तु मयेष्यते।
एकैव सङ्गमे बाला वियोगे तन्मयं जगत् ॥ ८ ॥
(शृङ्गारप्रकाशे)

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ९ ॥
(कालिदासस्य)

सङ्गविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः।
सङ्गे चैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ १० ॥

बाणस्यैकस्यामिषीकृत्य रक्षो
मारीचाख्यं संनिवृत्यानुजेन।
सीताशून्यां पश्यतः पर्णशाला-
मन्तर्वृत्तं किं कथा राघवस्य ॥ ११ ॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम्।
मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः ॥ १२ ॥
(कालिदासस्य)

प्रसीदेति ब्रूयामिदमसति दोषे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे! ॥ १३ ॥
(वल्लभदेवस्य)

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ १४ ॥
(अमरुकस्य)

*समसुहदुक्खपरिवड्ढिआण कालेण रूढपेम्माणम् ।
मिहुणाणँ मरइ जं तं खु जिअइ इअरं मुअं होइ ॥ १५ ॥

जत्थाणउच्छं गिरओ जत्थणईसाविसूरणं माणम् ।
सब्भावचाडुअं जणात्थिणहो तहिण्णात्थि ॥ १६ ॥

†अदंसणेण पेम्मं अवेइ अदिदंसणेण वि अवेइ ।
पिसुणजणजम्पिएण पि अवेइ एमेअ वि अवेइ ॥ १७ ॥

महिळासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
दिअहं अणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥ १८ ॥

अच्चउ ताव मणहरं पिआए मुहदंसणं अइमहग्घम् ।
तग्गामछेत्तसिमा वि झत्ति दिट्ठा सुहावेइ ॥ १९ ॥

जीवं अच्छसुधीअं फरीसो अंगे सुजीविअं कण्टोहि ।
हिअअं हिअएण ठिअं समं विओअन्ति किन्धदेव्वेण ॥

‡देव्वाअत्तम्मि फळे किं कीरइ एत्तिअं पुणो भणिमो ।
कङ्केल्लिपल्लवाणं ण पल्लवा होन्ति सारिच्छा ॥ २१ ॥
(सप्तशत्याम्)

---

* समसुखदुःखपरिवर्धितयोः कालेन रूढप्रेम्णोः ।
मिथुनयोर्म्रियते यत्तत् खलु जीवति इतरन्मृतं भवति ॥

† अदर्शनेन प्रेमापैत्यतिदर्शनेनाप्यपैति ।
पिशुनजनजल्पितेनाप्यपैत्येवमेवाप्यपैति ॥

महिलासहस्रभृते तव हृदये सुभग ! सा अमान्ती ।
दिवसमनन्यकर्मा अङ्गं तनुकमपि तनूकरोति ॥

अस्तु तावन्मनोहरं प्रियाया मुखदर्शनमतिमहार्घम् ।
तद्ग्रामक्षेत्रसीमापि झटिति दृष्टा सुखयति ॥

‡ दैवायत्ते फलं किं क्रियतामियत् पुनर्भणामः ।
कङ्केल्लिपल्लवानां न पल्लवा भवन्ति सदृशाः ॥

किं भरीमो पस्ससुहं कीसो भरिमो मुहं पसणच्छम् ।
किं व विळासे हरिमो किं किं भरिमो ण सम्मरीमो ॥
ळहेइ मेरुसिहरं विसइसिरिंसाअरस्स मोवअइ ।
ळहइ महीअपिअन्तं अणुराअपरव्वसं हिअअम् ॥ २३ ॥
*कहँ सा णिव्वण्णिज्जइ जीअ जहा लोइअम्मि अंगम्मि ।
दिट्ठी दुब्बळगाई व्व पङ्कपडिआ ण उत्तरइ ॥ २४ ॥
(गाथाकोशे)

इति विप्रलम्भशृङ्गारपद्धतिः ॥

कामपर्व सम्पूर्णम् ॥

## १९६. अथ विषयनिन्दापद्धतिः ।

रागो नाम मनःशल्यं गुणद्रविणतस्करः ।
राहुर्विद्याशशाङ्कस्य तपोवनहुताशनः ॥ १ ॥
(व्यासशतके)

अन्यत्र भीष्माद् गाङ्गेयादन्यत्र च हनूमतः ।
हरिणीखुरमात्रेण चर्मणा मोहितं जगत् ॥ २ ॥
(महाभारते)

विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ ३ ॥
(व्यासशतके)

यानि द्रष्टुमशक्यानि वस्तुरूपाणि भागशः ।
सन्निवेशविशेषान्धास्तान्येवालिङ्ग्य शेरते ॥ ४ ॥
(वल्लभस्य)

येषु येषु प्रदेशेषु कायो नित्यं जुगुप्सितः ।
तेषु तेषु जनः सक्तो वैराग्यं केन यास्यति ॥ ५ ॥

स्वार्थसम्प्रतिपत्त्यर्थं पुरुषस्येन्द्रियाणि हि ।
तमप्यतीत्य वर्तन्ते कास्था मित्राप्तबन्धुषु ॥ ६ ॥

---

*कथं सा निर्वर्ण्यतां यस्या यथालोकितेऽङ्गे ।
दृष्टिर्दुर्बलगौरिव पङ्कपतिता नोत्तरति ॥

अलं परिग्रहेणेह दोषवान् हि परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते स्वपरिग्रहात् ॥ ७ ॥

(श्रीविष्णुपुराणे)

पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
महापङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ८ ॥

आशालतावलयितं बद्धमूलं(च ? त्व)विद्यया ।
को हि तापयितुं शक्तः सुखेन भव(दापद ? पादप)म् ॥ ९ ॥

धनपुत्रकलत्रेषु स्वयमेवार्जितेष्वहो ।
अतिसक्ता विनश्यन्ति क्षुद्राः क्षौद्ररसेष्विव ॥ १० ॥

तरङ्गतरलैरर्थैर्भोगैर्भ्रूभङ्गभङ्गुरैः ।
मुहूर्तमेघैस्तारुण्यैर्विप्रलब्धो न नाम कः ॥ ११ ॥

तैलक्षयाद् यथा दीपो निर्वाणमधिगच्छति ।
धर्मक्षयात् तथा जन्तोः शरीरं नाशमृच्छति ॥ १२ ॥

मूर्छन् विषविपाकेषु विषयेष्वल्पचेतसः ।
अपथ्येष्वातुरस्येव नाभिलाषः प्रशाम्यति ॥ १३ ॥

जन्मान्तरशताभ्यस्ता विषयेषु मतिर्नृणाम् ।
जरद्गौरिव सस्येभ्यो दुःखेन विनिवार्यते ॥ १४ ॥

(व्यासस्य)

कोटराग्निर्यथा शेषः समूलं पादपं दहेत् ।
धर्मार्थानां तथाल्पोऽपि रागदोषो विनाशयेत् ॥ १५ ॥

(महाभारते)

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥ १६ ॥

(नैष्कर्म्यसिद्धौ)

मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यतःपरम् ।
राज्याद् देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि । १७ ॥

(महाभारते)

श्रद्धया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः॥ १८ ॥

(भारवेः)

अणुमात्रं यथा शल्यं शरीरे दुःखदायकम् ।
तथातिमू + संयुक्तं मनः संसारदायकम् ॥ १९ ॥

(महाभारते)

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ २० ॥

(कालिदासस्य)

भिक्षाशनं तदपि नीरसमेकवारं
शय्या मही परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णपटखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥ २१ ॥

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वली(येषि ? वेष्टि)ततनु-
र्नरः संसाराङ्के विशति यमधानीयवनिकाम् ॥ २२ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने-
ऽप्यहो ! धृष्टः कायस्तदपि मरणापायचकितः ॥ २३ ॥

(भर्तृहरेः)

अहो ! मोहः पुंसामिह जगति जातिः किल शुभा
जरामृत्युव्याधीनपि जयति या निष्प्रभतया ।
परस्माज्जातानां व्यसनशतमेतेऽपि ददति
स्वयं सुत्वा तेभ्यो विदिशति सुतान् सा विशसितुम् ॥ २४ ॥

([illegible])

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुभारकार्यगुरुभिः कालो हि न ज्ञायते ।

दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ २५ ॥
(भर्तृहरेः)

इति विषयनिन्दापद्धतिः ॥

---

## १९७. अथानित्यपद्धतिः ।

अनित्यं ते जगन्नित्ये ! वन्दनीयासि मां प्रति ।
यां तनोषि प्रयत्नेन वन्दनीयासि मां प्रति ॥ १ ॥

यां करोषि प्रयत्नेन दुःखानामप्ययत्नताम् ।
पृथिवी दह्यते येन मेरुश्चापि विशीर्यते ॥ २ ॥

शुष्यते सागरजलं शरीरे तत्र का कथा ।
मेघच्छाया खलप्रीतिर्नवसस्यानि योषितः ॥ ३ ॥

किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ।
(पञ्चतन्त्रे)

सर्वशास्त्रप्रमथनी सर्वोपायविनाशनी ।
अप्रमत्ता प्रमत्तानां नृणां जागर्त्यनित्यता ॥ ४ ॥

यथा हि पथिकः कश्चिच्छायामाश्रित्य विश्रमेत् ।
विश्रम्य च पुनर्गच्छेत् तद्वद् भूतसमागमः ॥ ५ ॥

अश्रान्तिर्वन्धुतां धत्ते कष्टं नष्टस्य नश्वरः ।
स्कन्धेन पङ्गुना पङ्गुर्नहि वर्त्मनि नीयते ॥ ६ ॥
(बृहत्कथायाम्)

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ७ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च ॥ ८ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ९ ॥

यथा फलानां पक्वानां नान्यत्र पतनाद् भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद् भयम् ॥ १० ॥

भूतजीवितमत्यल्पं निद्रा तस्यार्थं + + + ।
व्याधिशोकजरायासैर्ग्रस्तमर्धं च निष्फलम् ॥ ११ ॥
(महाभारते)

मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान् ॥ १२ ॥
(हर्षचरिते)

यथा भारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथावसीदन्ति नरा जरामृत्युवशंगताः ॥ १३ ॥
अङ्गीकरोति प्रथमं यथाजातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ १४ ॥
कायः संनिहितापायः सम्पदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पाति भङ्गुरम् ॥ १५ ॥
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ॥ १६ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद् भूतसमागमः ॥ १७ ॥
धर्मस्यार्थस्य कामस्य यशसो जीवितस्य च ।
अतृप्ताः पुरुषा राजन्! याता यास्यन्ति यान्ति च ॥ १८ ॥
यस्य स्यान्मृत्युना सख्यं यो वा स्यादजरामरः ।
तस्यैतद्युज्यते वक्तुमिदं मे श्वो भविष्यति ॥ १९ ॥
संयोगाश्च वियोगाश्च जातानां प्राणिनां ध्रुवाः ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ २० ॥
अशाश्वतमिदं सर्वं चिन्त्यमानं हि भारत! ।
कदलीसन्निभो लोकः समो ह्यस्य न विद्यते ॥ २१ ॥
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यथा ।
गाधोदके मत्स्य इव सुखं विन्देत कोविदः ॥ २२ ॥
अनित्यं परमं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ २३ ॥

महतो जनसार्थस्य गन्तव्यं प्रति गच्छतः ।
एकश्चेत् त्वरितं याति का तत्र परिदेवना ॥ २४ ॥

गतं शोचति को नाम यः प्रातः शोच्यते परैः ।
छिन्नहस्तो विहस्तस्य कथं बध्नाति कङ्कणम् ॥ २५ ॥
(बृहत्कथायाम्)

न तज्जगति पश्यामो विचिन्त्य निखिलं जगत् ।
दुष्प्रापं यदयत्नेन कीडकारस्य जिह्वया ॥ २६ ॥
(महाभारते)

अद्यैके प्रातरपरे विततेऽह्नि तथा परे ।
यान्ति निःसीम्नि संसारे कः स्थाता ननु शोचति ॥ २७ ।

लम्बमाने यदादित्ये न दत्तं धनमर्थिने ।
न स जानाति तद्दिनं प्रातः कस्य भविष्यति ॥ २८ ॥

अश्वत्थचकपत्राग्रलीनतोयकणोपमे ।
स्थिराशा जीविते यस्य तत्समो नास्त्यचेतनः ॥ २९ ॥

सत्यं मनोरमाः कान्ताः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ३० ॥

दूरस्थमपि भावित्वाद्विनाशं विध्युपस्थितम् ।
अयमेव हि नः कालः पूर्वमासीदनागतः ॥ ३१ ॥
(महाभारते)

मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ ॥ ३२ ॥
(कालिदासस्य)

यथार्चिषोऽग्नेः पवनस्य वेगा
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च सन्ततास्तु
तद्वच्छरीराणि शरीरिणां च ॥ ३३ ॥

यदा मेरुः श्रीमान् निपतति युगान्ताग्निदलितः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहसलिलाः ।
धरा गच्छन्त्यन्तं धरणिधरजालैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ३४ ॥
(भर्तृहरेः)

वधूः श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे
पदे शून्ये शून्ये प्रणिहितपदार्थान्तरमिति ।
नदीस्रोतोन्यायादकलितविवेकक्रममिदं
न च प्रत्यावृत्त्यै + + + + + + पूर्णमधु च ॥ ३५ ॥
(चतुर्विंपर्यांसे)

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किन्तु भ्रान्तपतङ्गपक्षपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः
[॥ ३६½ ॥
(भर्तृहरेः)

इत्यनित्यपद्धतिः ॥

---

## १९८. अथ शोकपद्धतिः ।

मानसेनैव दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ १ ॥

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्व + + + + त्वं तत् कस्मात् कमनुशोचसि ॥ २ ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ ३ ॥

न वाच्यमस्ति शोकेन शरीरं चोपशुष्यति ।
अमि + + + + + ति नास्ति शोके सहायता ॥ ४ ॥

शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ ५ ॥
(श्रीरामायणे)

अन्धस्य दर्पणेनेव हितेनेव हृतश्रुतेः ।
(दुःखाभितप्तः) शोकेन नेक्षते न शृणोति च ॥ ६ ॥

शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ७ ॥
(महाभारते)

इति शोकपद्धतिः ॥

---

## १९९. अथ ज्ञानपद्धतिः ।

समीपतीर्थस्नानात्तु द्+++++++मम् ।
ऋषीणां परमं गुह्यमिदं भरतसत्तम ! ॥ १ ॥

अग्निष्टोमादिभिर्यज्ञैर्विविधैराप्तदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थार्थे गमनेन यत् ॥ २ ॥

यास्तु लोके महानद्यः सर्वास्त ++++ ताः ।
तासां प्राक्स्रोतसः श्रेष्ठाः सङ्गमाश्च परस्परम् ॥ ३ ॥

कावेरीं तां समासाद्य विहृतामप्सरोगणैः ।
तत्र स्नात्वा नरो राजन् ! गोसहस्रफलं लभेत् ॥ ४ ॥

यावदस्थि मनुष्यस्य गङ्गातोयेऽवतिष्ठति ।
तावद्++++++स्वर्गं प्राप्य महीयते ॥ ५ ॥

श्रुताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥ ६ ॥

सेतुं दृष्ट्वा समुद्रस्य भ्रूणहा गुरुतल्पगः ।
मुच्यते सर्वपापेभ्यः कृतघ्नो +++++ ॥ ७ ॥

अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ ८ ॥

मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ९ ॥

यच्च रूपं परं दिव्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते यथा देवैर्मद्भक्तैर्दृश्यते यथा ॥ १० ॥

मद्भक्तान् शूद्रसामान्यानवमन्यन्ति ये नराः ।
नरकेष्ववतिष्ठन्ति वर्षकोटीर्नराधमाः ॥ ११ ॥

अपि चेत् स दुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥ १२ ॥

वृथा जप्तं वृथा दत्तं वृथा चेष्टं वृथा हुतम् ।
वृथा सत्यं च तत्तस्य यो न भक्तो मम द्विजः ॥ १३ ॥

इष्टं दत्तं + + + श्च + + + नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥ १४ ॥

प्रज्ञाप्रासादमारुह्य त्वं शोच्यः शोचते जनान् ।
जगतीस्थानिवाद्रिस्थः प्रज्ञया परिपश्यति ॥ १५ ॥

ज्ञानेन तु + + + + + + नाशितमात्मना ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत् परम् ॥ १६ ॥

तमःपरिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ १७ ॥

यथैधांसि समिद्धोऽ(ग्निर्भस्मसात् )कुरुते तथा ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ! ॥ १८ ॥

(महाभारते)

इति ज्ञानपद्धतिः ॥

---

## २००. अथ वैराग्यपद्धतिः ।

सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापि दूयता ॥ १ ॥

द्व्यक्षरस्तु भवेन्मृत्यु(स्त्र्यक्षरं ब्र)ह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् ॥ २ ॥

(महाभारते)

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ३ ॥

सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ ४ ॥

असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम् ॥ ५ ॥
(महाभारते)

यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ६ ॥
(श्रीविष्णुपुराणे)

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य पर्याप्तमिति पश्यन्न मुह्यति ॥ ७ ॥

न योजनशतं दूरं बाध्यमानस्य तृष्णया ।
सन्तुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ८ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव का तत्र परिदेवना ॥ ९ ॥

किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥ १० ॥

पश्यन्नपि प्रस्खलसि शृण्वन्नपि न बुध्यसे ।
शठैस्त्वमिन्द्रियैरेभिर्बुद्धिमानपि वञ्च्यसे ॥ ११ ॥

लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया ।
न सन्ति खलु तावन्त्यो गङ्गायामपि वालुकाः ॥ १२ ॥

नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ १३ ॥

अनिर्वेदः श्रियो मूलं दुःखनाशे सुखस्य च ।
महान् भवति निर्विण्णः सुखं चात्यन्तमश्नुते ॥ १४ ॥
(महाभारते)

देहेन्द्रियान्तःशल्यानामार्द्राणां मर्म(दे ? दा)रिणाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ १५ ॥

अनन्तं बत मे वृत्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ १६ ॥
(महाभारते)

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना येन यूयं यूयं वयं वयम् ॥ १७ ॥
(भर्तृहरेः)

एतावदेव पर्याप्तं भिक्षोरेकान्तशायिनः ।
न तस्य म्रियते कश्चिन्म्रियते सोऽस्य कस्यचित् ॥ १८ ॥

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः ॥ १९ ॥

चतुर्भिरुह्यते यत्तत् सर्वशक्त्या शरीरकम् ।
तूलायते तदेवाहंधियाऽध्मातात्मचेतसाम् ॥ २० ॥

अतिक्रान्तमतिक्रान्तमनागतमनागतम् ।
वर्तमानसुखभ्रान्तिर्नेवा भोगिदरिद्रयोः ॥ २१ ॥

जरन्मृगः शृङ्गमिव त्वचं वृद्ध इवोरगः ।
पक्षी वोन्मथितं फालं बन्धमुज्झति तत्त्ववित् ॥ २२ ॥
(बृहत्कथायाम्)

जायते क्षणदृष्टेषु स्नेहो दुःखाय देहिनाम् ।
ममायमिति मुग्धानां न स तेषां न तस्य ते ॥ २३ ॥

प्रयाति चपलो लोकः स्रवत्यायुररक्षितम् ।
इति वस्तुस्वभावेऽस्मिन् कोऽनुशोचति तत्त्वधीः ॥ २४ ॥

वा(श्यै)कं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं ध्यायेदुभयतः सुखम् ॥ २५ ॥
(मनोः)

यदभावि न तद् भावि यद्भावि न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ २६ ॥

सन्ति शाकान्यरण्येषु नदीषु विमलोदकम् ।
चन्द्रः सामान्यदीपोऽयं विभवैः किं प्रयोजनम् ॥ २७ ॥
(महाभारते)

प्रतिगृहमदैन्यसुलभे ! निरीहमातर्दरिद्रकल्पलते ! ।
कुनृपतिनरकोत्तारिणि ! भगवति ! भिक्षे ! नमस्तुभ्यम् ॥ २८ ॥

धनिषु मुधा किमु धावत तूष्णीमाध्वं न साध्विदं चरितम् ।
विधिलिखिताक्षरमफलं फलति कपालं न भूपालः ॥ २९ ॥

(पञ्चतन्त्रे)

शय्या शैलतलं गृहं गिरिगुहा वासस्तरूणां त्वचः
सारङ्गाः सुहृदो न तु(?) क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां नैर्झरमम्बुपानमुचितं रत्यै च विद्याङ्गना
मन्यन्ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ३० ॥

(भर्तृहरेः)

नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो ! मूका वराका वयम् ॥ ३१ ॥

(यादवप्रकाशे)

+ ढं रुन्धि दृढं कवाटयुगलं यद्वद् गृहीत्वा गले
द्राङ् निष्कासय नास्ति न क्षितिरुह ! त्वं देव ! सुस्थो भव ।
अस्माकं पुनरप्रदाय सुलभा निष्कारणाविष्कृत-
क्रोधान्धप्रतिहारपालपिहितद्वारा न वाराणसी ॥ ३२ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कहृदया धैर्यद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ३३ ॥

(भर्तृहरेः)

इह करवण्णज्जरंई अवेसाबि विचित्तसंसारे ।
जरमरणवाहिविअरे जणविओअदुक्खज्जइ ण होत्ति ॥ ३४ ॥

(गाथाकोशे)

इति वैराग्यपद्धतिः ॥

## २०१. अथ मोक्षपद्धतिः ।

पञ्चभूतात्मके देहे देही मोहतमोवृतः ।
अहमेतदिति ह्युच्चैः कुरुते कुमतिर्मतिम् ॥ १ ॥
(श्रीविष्णुपुराणे)

पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः ।
आप्याय्यते यदि ततः पुंसो भोगोऽत्र किंकृतः ॥ २ ॥
(महाभारते)

मातर्मेदिनि ! तात ! मारुत ! सखे ! तेजः ! सुबन्धो ! जल !
भ्रातर्व्योम ! निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतस्फारस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ३ ॥
(भर्तृहरेः)

इति मोक्षपद्धतिः ॥

---

मोक्षपर्व समाप्तम् ॥

कालिङ्गराजकृता सुभाषितरत्नमाला समाप्ता ॥

---

## २०२. अथ स्तोत्रपद्धतिः ।

अपराधसहस्रभाजनं
पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे !
कृपया केवलमात्मसात्कुरु ॥ १ ॥

निमज्जतोऽनन्तमहार्णवाम्भ-
श्चिराय मे कूलमिवासि लब्धम् ।
त्वयापि लब्धं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः ॥ २ ॥

अभूतपूर्वं मम भावि किं वा
सर्वं सहे मे सहजं च दुःखम् ।

किन्तु त्वदग्रे शरणागतानां
पराभवो नाथ! न तेऽनुरूपम् ॥ ३ ॥

इति स्तोत्रपद्धतिः ॥

---

इति श्रीमहाराजाधिराजकुलशेखरासाधारणमन्त्रिणा निखिलदिक्षु
विश्रुतकालिङ्गराजपट्टबन्धेन नित्योदयप्रतापनिर्जितसूर्येण
सूर्येण सङ्गृहीते कुलशेखरसूक्तिरत्नहारे
मोक्षपर्व सम्पूर्णम् ॥

---

शुभं भूयात् ।

---

# श्लोकानुक्रमणी ।

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या. | श्लोकसङ्ख्या. |
|---|---|---|---|
| 46 | अउळीणो | 32 | 79 |
| 122 | अकअत्थपडिणिअत्ता | 99 | 28 |
| 225 | अकर्तव्येष्वसाध्वीव | 175 | 13 |
| 39 | अकहिउजन्ता विजणे | 31 | 52 |
| 29 | आक्रमां कामयति | 29 | 17 |
| 80 | अकार्यकरणाद्भीतः | 55 | 1 |
| 134 | अकालमृत्युर्विश्वासः | 108 | 8 |
| 109 | अकिञ्चिदपि कुर्वाणः | 88 | 22 |
| 171 | अकीर्तिः कीर्त्यते | 155 | 2 |
| 130 | अकुलीनस्तु पुरुषः | 104 | 10 |
| 121 | अकृत्वा हेलया | 99 | 18 |
| 87 | अक्षमा श्रीपरित्यागः | 68 | 4 |
| 217 | अक्षरद्वयमभ्यस्तम् | 171 | 3 |
| 98 | अक्षौहिणी रिपुं | 81 | 3 |
| 129 | अखळन्ता | 102 | 26 |
| 60 | अगूढविभवा | 38 | 2 |
| 256 | अग्गे पुळअं | 194 | 5 |
| 113 | अग्निः स्तोको वर्धते | 90 | 10 |
| 20 | अग्निर्हि देवताः | 19 | 1 |
| 266 | अग्निष्टोमादिभिः | 199 | 2 |
| 15 | अग्निहोत्रं | 12 | 2 |
| 237 | अग्निहोत्रफला | 181 | 21 |
| 8 | अग्नौ प्रास्ताहुतिः | 6 | 1 |
| 198 | अग्रच्छाया तृणाग्निः | 163 | 124 |
| 159 | अग्रतश्शकटानीकम् | 141 | 10 |
| 246 | अग्रे स्त्रीनखपाटलम् | 184 | 7 |
| 64 | अघृष्टमिव माणिक्कं | 40 | 2 |
| 122 | अङ्गणवेदी वसुधा | 99 | 23 |
| 141 | अङ्गन्यासैः | 115 | 8 |
| 166 | अङ्गमर्दविनोदेषु | 150 | 11 |
| 263 | अङ्गीकरोति | 197 | 14 |
| 257 | अङ्गुलीकिसलयाग्रतर्जनम् | 195 | 12 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या. | श्लोकसङ्ख्या. |
|---|---|---|---|
| 116 | अतिधर्माद् बलम् | 95 | 2 |
| 148 | अतिपरिचयात् | 124 | 13 |
| 44 | अतिमथिते | 32 | 55 |
| 231 | अतिमात्रभासुरत्वम् | 177 | 10 |
| 87 | अतिमानः श्रियम् | 69 | 2 |
| 191 | अतिरागात् | 163 | 52 |
| 218 | अतिसञ्चयलुब्धानाम् | 171 | 12 |
| 18 | अतिसाहसमतिदुष्करम् | 13 | 16 |
| 63 | अतिसाहसिकम् | 39 | 33 |
| 167 | अतीव खलु ते | 151 | 1 |
| 252 | अत्थसिहरम्मि | 190 | 5 |
| 208 | अत्थो इमेण इअवि | 167 | 33 |
| 251 | अत्यन्तसुखसञ्चाराः | 188 | 2 |
| 236 | अत्यल्पमपि | 181 | 3 |
| 145 | अत्यायासेन | 123 | 15 |
| 205 | अत्यार्यमतिदातारम् | 167 | 2 |
| 170 | अत्युच्चाः परितः | 153 | 9 |
| 128 | अत्युन्नतिव्यसनिनः | 102 | 18 |
| 126 | अथ राजादरः | 101 | 3 |
| 167 | अथर्वविधितत्त्वज्ञैः | 150 | 14 |
| 95 | अथेतरे सप्त | 76 | 13 |
| 65 | अदण्ड्यान् दण्डयन् | 40 | 15 |
| ” | अदत्तवारम् | ” | 16 |
| 265 | अदर्शनात् | 198 | 2 |
| 17 | अदाता पुरुषः | 13 | 14 |
| 215 | ” | 170 | 8 |
| 49 | अदीर्घदर्शिभिः | 34 | 3 |
| 222 | अदृष्टमुखभङ्गस्य | 174 | 1 |
| 256 | अदृष्टे दर्शनोत्कण्ठा | 195 | |
| 154 | अदेशस्थो | 134 | 4 |
| 258 | अद्दंसणेण पेम्मं | 195 | 17 |
| 90 | अद्यात् काकः | 73 | 8 |
| 140 | अद्यापि हरिहरादिभिः | 114 | 16 |

| पृष्ठसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या. | श्लोकसङ्ख्या. |
|---|---|---|---|
| 239 | अनुकुरुतः | 181 | 42 |
| 187 | अनुगन्तुं सताम् | 163 | 1 |
| 159 | अनुत्थानाद्भवेत् | 141 | 13 |
| 177 | अनुयुक्तो दस्युवधे | 156 | 72 |
| ,, | अनुरक्तेन | ,, | 66 |
| 252 | अनुरागवती | 190 | 1 |
| 189 | अनृतं च | 163 | 28 |
| 193 | अनेकदोषदुष्टस्य | ,, | 66 |
| 74 | अनौचित्येन | 47 | 4 |
| 223 | अन्तःसारोऽपि | 174 | 10 |
| 79 | अन्तकः पवनः | 54 | 9 |
| 130 | अन्तरङ्गा हि ये | 104 | 3 |
| 43 | अन्तश्छिद्राणि | 32 | 47 |
| 90 | अन्ध तमः | 73 | 9 |
| 265 | अन्धस्य दर्पणेन | 198 | 6 |
| 8 | अन्धस्य पन्थाः | 5 | 20 |
| 83 | अन्धीकरोमि | 59 | 15 |
| 182 | अन्नपानम् | 158 | 9 |
| 52 | अन्नपानानि | 35 | 17 |
| 18 | अन्नप्रणाशे | 14 | 3 |
| ,, | अन्नाद्रकं च | ,, | 2 |
| ,, | अन्नेन धार्यते | ,, | 4 |
| 166 | अन्ने पाने च | 150 | ,, |
| 259 | अन्यत्र भीष्माद् | 196 | 2 |
| 195 | अन्यथा वर्तमानानाम् | 163 | 89 |
| 49 | अन्यथा शास्त्र | 34 | 12 |
| 85 | अन्यायोपार्जितम् | 65 | 6 |
| 155 | अन्योन्यकृतवैराणाम् | 136 | ,, |
| 82 | अपकारिणि | 59 | 10 |
| 193 | अपकारिषु | 163 | 67 |
| 173 | अपकुर्वात्समक्षम् | 156 | 21 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 132 | अलसं दुर्मुखं | 106 | 2 |
| 55 | अलिरनुसरति | 35 | 47 |
| 112 | अवडव्वतच्छण्णं | 89 | 12 |
| 33 | अवडसअपडण | 29 | 46 |
| 251 | अवणको सन्तापं | 188 | 6 |
| 111 | अवालिप्तेषु मूढेषु | 89 | 4 |
| 13 | अवश्यं लभते | 9 | 3 |
| 56 | अवश्यभव्येषु | 35 | 54 |
| 249 | अवापुस्तापं | 187 | 6 |
| 110 | अविङ्गणपच्छाणिज्जं | 88 | 32 |
| 73 | अविजित्य यः | 44 | 9 |
| 30 | अविज्ञातप्रपञ्चस्य | 29 | 21 |
| 237 | अविद्यः पुरुषः | 181 | 19 |
| 7 | अविद्यो वा सविद्यः | 5 | 14 |
| 82 | अविधेये जने | 59 | 6 |
| 199 | अविधेयो भृत्यजनः | 163 | 136 |
| 74 | अविनयरतमादरात् | 46 | 1 |
| 144 | अविसृष्टोऽपि सन् | 123 | 6 |
| 268 | अव्यक्तादीनि भूतानि | 200 | 9 |
| 67 | अव्यवसायिनमलसम् | 40 | 32 |
| 113 | अव्यवस्थितचित्तस्य | 163 | 74 |
| 9 | अव्रतस्थापि ते धर्मः | 7 | 4 |
| 134 | अशक्यमपि शक्येत | 108 | 10 |
| 263 | अशाश्वतमिदम् | 197 | 21 |
| 22 | अशीला भिन्नमर्यादा | 24 | 4 |
| 176 | अश्मना साधयेत् | 156 | 53 |
| 7 | अश्मानमप्युपायेन | 5 | 18 |
| 262 | अश्रान्तिर्बन्धुताम् | 197 | 6 |
| 264 | अश्वत्थचलपत्राग्र | 197 | 20 |
| 14 | अश्वमेधसहस्रम् | 10 | 1 |
| 266 | अश्वमेधसहस्राणाम् | 199 | 8 |
| 164 | अश्वव्यूहैर्नटानीकम् | 149 | 11 |

| पुस्तकसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 241 | आघ्रातं मरणेन | 181 | 56 |
| 21 | आचारसम्भवो धर्मः | 23 | 2 |
| 22 | आचाराल्लभ्यते | ,, | 3 |
| 50 | आजन्मनो विहितभक्तिः | 34 | 22 |
| 184 | आजन्माधिपसम्भोगात् | 159 | 10 |
| 233 | आजन्मसिद्धं कौटिल्यम् | 179 | 5 |
| 89 | आज्ञा तेजः पार्थिवानाम् | 72 | 2 |
| 97 | आज्ञारूपेण या शक्तिः | 79 | 1 |
| 136 | आतुराद्वित्तहरणं | 110 | 6 |
| 109 | आतुरे व्यसने प्राप्ते | 88 | 12 |
| 176 | आत्मना संगृहीतेन | 156 | 54 |
| 156 | आत्मनोऽभ्युदयाकाङ्क्षी | 137 | 2 |
| 24 | आत्मनोऽर्धमिति | 26 | 6 |
| 28 | आत्मप्रशंसिनं धृष्टं | 29 | 2 |
| 124 | आत्मानं च परं चैव | 100 | 6 |
| 158 | ,, | 141 | 4 |
| 233 | ,, | 179 | 8 |
| 189 | आत्मानं नावमन्येत | 163 | 29 |
| 73 | आत्मानं प्रथमं राजा | 45 | 2 |
| 106 | आत्मानं मन्त्रिणम् | 85 | 10 |
| 183 | आत्मानं सर्वथा रक्षेत् | 159 | 1 |
| 51 | आत्मायत्ते गुणाधाने | 35 | 3 |
| 184 | आत्मार्थं सन्ततिः | ,, | 8 |
| 194 | आत्मैव यदि नात्मानं | 163 | 76 |
| 175 | आदातव्यं न दातव्यं | 156 | 43 |
| 14 | आदित्यचन्द्रावनिलः | 9 | 14 |
| 261 | आदित्यस्य गतागतैः | 196 | 25 |
| 37 | आदिमध्यनिधनेषु | 31 | 35 |
| 33 | आदिराजयशोबिम्बम् | 30 | 2 |
| 14 | आधिव्याधिपरीताय | 9 | 13 |
| 63 | आनृशंस्यमनुक्रोशः | 39 | 34 |
| 184 | आन्तरेभ्यः परान् | 160 | 5 |

| पुटसङ्ख्या | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 105 | आवर्त्यं यो मुहुर्भ्रमम् | 85 | 3 |
| 224 | आशाखनिरगाधेयम् | 175 | 1 |
| 226 | ,, | ,, | 20 |
| ,, | आशागर्तः प्रतिप्राणि | ,, | 19 |
| 270 | आशा नाम नदी | 200 | 33 |
| 225 | आशा नाम मनुष्याणाम् | 175 | 17 |
| 224 | आशापिशाचिकाविष्टः | ,, | 7 |
| 222 | आशायास्तनया माया | 173 | 15 |
| 260 | आशालतावलयितम् | 196 | 9 |
| 144 | आशीविषमिव क्रुद्धम् | 123 | 4 |
| 19 | आश्रितस्याप्रदानेन | 16 | 2 |
| 233 | आसभवसेण गरुअं | 178 | 11 |
| 192 | आसने शयने याने | 163 | 55 |
| 145 | आसन्नसेवां नृपतेः | 123 | 13 |
| 225 | आसन्नान् पुरतो भोगान् | 175 | 16 |
| 153 | आसम्प्रवृद्धेरपि | 132 | 5 |
| 173 | आसादयेदुपचितान् | 156 | 25 |
| 164 | आहवेषु यदन्योन्यं | 149 | 17 |
| 63 | आहूतस्याभिषेकाय | 39 | 29 |
| 68 | आहूतेषु विहङ्गमेषु | 40 | 41 |
| 36 | इक्षोरग्रात् क्रमशः | 31 | 26 |
| 146 | इङ्गितज्ञास्तु मगधाः | 123 | 30 |
| 156 | इङ्गिताकारचेष्टाभिः | 138 | 5 |
| 128 | इच्छापडिवण्णसुहं | 102 | 23 |
| 213 | इतः स्वपिति केशवः | 168 | 41 |
| 11 | इतरेतरयोर्नीतौ | 8 | 6 |
| 182 | इतिहासपुराणानि | 158 | 13 |
| 41 | इतो हास्यतरं लोके | 32 | 21 |
| 123 | इत्तो रुहिरं इह | 99 | 34 |
| 186 | इत्यादिदूष्यान् सन्दूष्य | 161 | 8 |
| 58 | इदं कृतमिदं कार्यम् | 37 | 6 |
| 164 | इदं हि प्राणयशसां | 149 | 16 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|---|
| 195 | एकस्मिन्नेव जायेते | 163 | 90 |
| 90 | एकस्मिन् यत्र निधनं | 73 | 6 |
| 61 | एकस्य हि प्रसादेन | 39 | 8 |
| 72 | एकस्यापि न यः शक्तः | 44 | 7 |
| 187 | एकान्तेन हि सर्वेषाम् | 162 | ,, |
| 204 | एकामिषप्रभवम् | 165 | ,, |
| 19 | एकाहमपि कौन्तेय ! | 15 | 4 |
| 91 | एकेनापि सुपुत्रेण | 74 | 8 |
| 199 | एकेनैव हि कश्चित् | 163 | 45 |
| 213 | एके ळहु असहा वा | 168 | 140 |
| 129 | एको चिअ जीअसुहं | 102 | 28 |
| 112 | एको चिअ दोसो | 89 | 13 |
| 241 | एको नेता क्षत्रियः | 181 | 61 |
| 229 | एको हि दोषः | 176 | 21 |
| 118 | एको हि वारणपतिः | 96 | 7 |
| 99 | एको ह्यमात्यः | 82 | 10 |
| 135 | एतच्छास्त्रार्थतत्त्वं | 108 | 20 |
| 89 | एतदर्थं हि जानः | 72 | 1 |
| 165 | एतद्धनञ्जयः | 149 | 26 |
| 200 | एतान् गुणान् | 163 | 154 |
| 269 | एतावदेव पर्याप्तम् | 200 | 18 |
| 88 | एते चान्ये च बहवः | 70 | 8 |
| 251 | एते हि समुपासीना | 188 | 3 |
| 154 | एतैः सन्धि न कुर्वीत | 134 | 5 |
| 245 | एद्दहमेअम्मि जए | 183 | 11 |
| 28 | एरण्डभेण्डोकनळैः | 29 | 5 |
| 164 | एवं निहत्य | 149 | 13 |
| 182 | एवं प्रयत्नम् | 158 | 11 |
| 166 | एवं विषप्रयोगेण | 150 | 7 |
| 176 | एवंवृत्तस्य राज्ञः | 156 | 62 |
| 182 | एवं सर्वमिदम् | 158 | 6 |
| 102 | एवमल्पश्रुतः | 83 | 7 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 252 | एष वृक्षशिखरे | 189 | 5 |
| 224 | एहि गच्छ पतोत्तिष्ठ | 175 | 8 |
| 205 | ऐश्वर्यतिमिरं | 167 | 1 |
| 183 | ऐश्वर्यधनरत्नानां | 159 | 2 |
| 206 | ऐश्वर्यमत्तः पापिष्ठः | 167 | 12 |
| 58 | ऐश्वर्ये वा सुविस्तीर्णे | 37 | ,, |
| 97 | ओअग्गइ अहिमाणं | 78 | 7 |
| 252 | ओकुग्गपरित्ताणक्षिकजं | 189 | ,, |
| 180 | औत्सुक्यमात्रमव | 156 | 104 |
| 55 | औदासीन्यं दयालूनाम् | 35 | 46 |
| 146 | औरसानपि पुत्रान् | 123 | 23 |
| 175 | कः काकः कानि | 156 | 49 |
| 44 | कटु रटति निकटवर्त्ती | 32 | 57 |
| 69 | कट्ठारिचरण | 40 | 43 |
| 141 | कठिनास्तीक्ष्णवक्त्राश्च | 115 | 7 |
| 223 | कण्ठगद्गदता | 174 | 6 |
| 126 | कदर्थितस्यापि च | 101 | 7 |
| 94 | कदा न्वहं समेष्यामि | 76 | ,, |
| 31 | कनकभूषण | 29 | 32 |
| 48 | कपटपटुता द्रोहे | 33 | 19 |
| 22 | कपाले यद्वदापः | 24 | 1 |
| 244 | कपोले जानक्याः | 182 | 2 |
| 160 | कबन्धः परिघाभासः | 143 | 1 |
| 84 | करोति यः परद्रोहम् | 62 | ,, |
| 211 | करोति योऽशेष | 168 | 29 |
| 51 | करोतु नाम नीतिज्ञः | 35 | 4 |
| 85 | कर्णनाळीक | 66 | 5 |
| 51 | कर्तुरिष्टमनिष्टम् | 35 | ,, |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 4 | कर्पूर इव दग्धोऽपि | 2 | 13 |
| 176 | कर्मणा मनसा | 156 | 55 |
| 141 | कलपत्रनिर्गत | 115 | 13 |
| 158 | कलानां ग्रहणात् | 113 | 4 |
| ,, | कलाभिरुच्छ्रिता | ,, | 2 |
| 47 | कलेरन्ते भविष्यन्ति | 33 | 9 |
| ,, | कलौ जगत्पतिम् | 33 | 8 |
| 197 | कल्याणी बत ! गाथेयम् | 163 | 110 |
| 256 | कळ्ळविअ खरहिअओ | 194 | 6 |
| 137 | कविः सूयति काव्यानि | 111 | 1 |
| 248 | कशाभिरिव | 186 | 2 |
| 29 | कश्चिदाम्रवणम् | 29 | 13 |
| 207 | कस्मैचित् कपटाय | 167 | 24 |
| 50 | कस्यचिन्नहि | 34 | 20 |
| 243 | कस्स व जणंति | 181 | 72 |
| 259 | कहँ सा णिव्वणिज्जइ | 195 | 24 |
| 49 | कहतब्भिमविळा- | 34 | 6 |
| 123 | काअरपडिमुक्कउरं | 99 | 30 |
| 51 | काऊणमणं | 34 | 25 |
| 130 | काकः श्वा च बिडालश्च | 104 | 11 |
| 206 | काकतालीय | 167 | 14 |
| 31 | काकाः प्रभुप्रणिहितैः | 29 | 30 |
| 140 | काकालौल्यं यमात् | 115 | 1 |
| 2 | कान्तं खलगिरा | 1 | 7 |
| 138 | ,, | 112 | 3 |
| 95 | का प्रह्लुताभिषेकात् | 76 | 12 |
| 73 | कामः क्रोधश्च | 44 | 11 |
| 74 | ,, | 47 | 1 |
| 75 | कामजेषु प्रसक्त. | 48 | 2 |
| 177 | कामवृत्तस्त्वयम् | 156 | 68 |
| 97 | कामात् क्रोधात् | 80 | 1 |
| 65 | कामाभिभूतः | 40 | 8 |
| 74 | कामा मनुष्यम् | 47 | 6 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या. | श्लोकसङ्ख्या |
|---|---|---|---|
| 12 | कामार्थी लिप्समानस्तु | 8 | 17 |
| 139 | कार्मुके नूतना | 114 | 6 |
| 263 | कायः सन्निहितापायः | 197 | 15 |
| 24 | कायक्लेशेन | 26 | 1 |
| 141 | कायस्थस्य च | 115 | 4 |
| 140 | कायस्थेनोदरस्थेन | ,, | 3 |
| 198 | कार्यगतैर्वैचित्र्यात् | 163 | 130 |
| 104 | कार्यमालोचितापायम् | 84 | 6 |
| 175 | कार्यस्य हि गरीयस्त्वात् | 156 | 48 |
| 2.6 | कार्याकार्ये तुलयति | 175 | 22 |
| 180 | कार्यार्थिनः | 156 | 102 |
| 203 | कार्यार्थी बन्धुजनः | 164 | 10 |
| 157 | कार्ये कर्मणि | 138 | 7 |
| 102 | कार्ये महति | 83 | 9 |
| 30 | कालप्राप्तं महारत्नम् | 29 | 20 |
| 181 | कालप्राप्तमुपादद्यात् | 157 | 7 |
| 61 | कालो वा कारणम् | 39 | 11 |
| 242 | कावितमा दुर्वगाहं | 181 | 68 |
| 266 | कावेरीं तां समासाद्य | 199 | 4 |
| 33 | काव्यं यशसे | 30 | 5 |
| 30 | काव्येन मूर्खधनिनम् | 29 | 28 |
| 161 | काष्ठाग्निं निर्हरेत् | 145 | 7 |
| 67 | किं करिष्यत्यपात्राणाम् | 40 | 30 |
| 31 | किं कर्पूररजः | 29 | 31 |
| 196 | किं काकाणिकः | 163 | 105 |
| 210 | किं कुलेन विशिष्टेन | 168 | 19 |
| 169 | किं कृतेन न यत्र | 153 | 3 |
| 216 | किं जातोऽसि | 170 | 13 |
| 213 | किं तेषा क्षेण | 168 | 42 |
| 76 | किं ते यूतेन | 50 | 2 |
| 268 | किं धनेन करिष्यन्ति | 200 | 10 |

| पुष्टसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|---|
| 45 | के वि कभपरिभवम् | 32 | 67 |
| 78 | को जातु परभावां हि | 54 | 4 |
| 260 | कोटराग्निर्यथा | 196 | 15 |
| 143 | कोटिसारोऽपि सन् | 122 | 1 |
| 144 | कोऽग्रेऽस्यहमिति | 125 | 8 |
| 122 | को धीरस्य मनस्विनः | 99 | 25 |
| 240 | कोऽन्धो योऽकार्यरतः | 181 | 48 |
| 81 | कोपं प्रभो ! संहर | 58 | 4 |
| 91 | कोऽर्थोऽस्ति बहुभिः | 74 | 7 |
| 237 | को विदेशः सविद्यानाम् | 181 | 18 |
| 112 | कोशस्तु सततम् | 90 | 3 |
| 113 | कोशाद्दाश्रयणीयत्वम् | ,, | 8 |
| 162 | कोशेन पौरैः | 145 | 12 |
| 113 | कोशे वितीर्णे | 91 | 2 |
| 63 | कोष्ठागारं | 39 | 27 |
| 172 | कोष्ठाशूरेऽभियुक्तः | 156 | 14 |
| 175 | कौर्मसङ्कोचम् | ,, | 44 |
| 208 | क्रमागतेति | 167 | 28 |
| 181 | क्रयविक्रयं | 157 | 11 |
| 48 | क्रयविक्रयकाले | 33 | 14 |
| 82 | क्रुद्धः पापं न | 59 | 2 |
| 116 | क्रूरं व्यसनिनं | 94 | 9 |
| 85 | क्रूरक्रकचसङ्काशो | 66 | 3 |
| 131 | क्रूरोऽपि भोग्यताम् | 105 | 2 |
| 177 | क्रोधं कुर्यान्न च | 156 | 74 |
| 232 | क्वचिदपि वस्तुविशेषे | 178 | 7 |
| 213 | क्वचिद् भूमौ | 168 | 40 |
| 72 | क चिराय परिग्रहः | 43 | 19 |
| 261 | क्षणं बालो | 196 | 22 |
| 241 | क्षते प्रहाराः | 181 | 57 |
| 66 | क्षत्रियस्य प्रमत्तस्य | 40 | 26 |
| 88 | ,, | 71 | 1 |

| पुटसङ्ख्या. | श्लोकाः. | पद्धतिसङ्ख्या | श्लोकसङ्ख्या. |
|---|---|---|---|
| 190 | क्षत्रिये सङ्गतिः | 163 | 40 |
| 86 | क्षपयत्युग्रदण्डः | 67 | 5 |
| 121 | क्षमया हि | 99 | 12 |
| 234 | क्षमा धृतिः क्षमा | 179 | ,, |
| 23 | क्षमावतामयं | ,, | 1 |
| 131 | क्षमी दाता गुणग्राही | 105 | 3 |
| 180 | क्षययुक्तमपि | 156 | 98 |
| 242 | क्षान्तिश्चेत् कवचेन | 181 | 64 |
| 246 | क्षीरक्षालितचन्द्रेव | 184 | 1 |
| 234 | क्षेत्रं तदेव | 179 | 9 |
| 161 | क्षेमस्थेषु च | 145 | 3 |
| 252 | खं प्रसुप्तमिव | 189 | 6 |
| 220 | खण्डं खडम्मि कअं | 172 | 6 |
| 251 | खर्जूरपुष्पाकृतिभिः | 188 | 5 |
| 57 | खर्वाटो दिवसेश्वरस्य | 36 | 7 |
| 41 | खलजिह्वा च नौका | 32 | 26 |
| 213 | खळपवराहा | 168 | 46 |
| 35 | खलसङ्गेऽपि | 31 | 18 |
| 40 | खलेषु सत्सु निर्याता | 32 | 8 |
| 138 | खलैर्हि योज्यते | 112 | 4 |
| 226 | खलोल्लापाः सोढाः | 175 | 25 |
| 231 | ख्याता नराधिपतयः | 177 | 13 |
| 256 | गच्छ गच्छसि चेत् | 195 | 1 |
| 257 | गच्छति पुरः | ,, | 9 |
| 144 | गच्छन्नपि परां | 123 | 10 |
| 165 | गजानां रथिनः | 149 | 24 |
| 138 | गणयन्ति नापशब्दं | 112 | 5 |
| 195 | गणाद् गृह्णन् | 163 | 87 |
| 117 | गण्यः सैन्येन | 95 | 7 |
| 264 | गतं शोचसि कः | 197 | 25 |
| 7 | गतश्री गणिका | 5 | 10 |
| 35 | गतिरेवात्मनः | 31 | 17 |

